# अथ पूर्वाङ्गपूजनम्

**देहशुद्धिः**

ॐ देव सवितः प्रसुव यज्ञम्प्रसुवयज्ञपतिम्भगाय ॥
दिव्यो गन्धर्व्वः केतपूः केतन्नः पुनातुव्वाचस्प्पतिर्व्वाजन्नः स्वदतु स्वाहा ॥ शु.यजुर्वेद ९।१
ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु ॥

## आचमनम्

ॐ ऋग्वेदाय नमः स्वाहा ।
ॐ यजुर्वेदाय नमः स्वाहा ।
ॐ सामवेदाय नमः स्वाहा ।
ॐ अथर्ववेदाय नमः । (हस्तौ प्रक्षाल्य)

## आसनशुद्धिः

ॐ भूरसि भूमिरस्यदितिरसि व्विश्श्ववधाया व्विश्श्वस्य भुवनस्य धर्त्री ।
पृथिवीं व्यच्छ पृथिवीन्दृᳬह पृथिवीम्मा हिᳬसीः ॥ १३।१८

## तिलकधारणम्

ॐ स्वस्तिनऽइन्द्रो व्वृद्धश्श्रवाः स्वस्ति नः पूषा व्विश्श्ववेदाः ॥
स्वस्ति नस्ताक्ष्यर्योऽअरिष्टनेमिः स्वस्ति नो बृहस्प्पतिर्दधातु ॥ २५।१९

## पवित्रधारणम्

ॐ पवित्रे स्थो व्वैष्णव्व्यौ सवितुर्व्वः प्प्रसवऽउत्पुनाम्म्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥
तस्यते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ १।१२

## शिखाबन्धनम्

ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽ अश्श्वेषु रीरिषः ॥
मा नो व्वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६।१६

**ततो हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा-**

## गणपत्यथर्वशीर्षम्

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि । त्वमेव केवलं धर्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यम् । ऋतं वच्मि । सत्यं वच्मि । अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् ।

अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि, पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि । सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि । त्वं गुणत्रयातीतः । त्वमवस्थात्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम् । गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । विन्दुरुत्तररूपम् । नादः सन्धानम् । संहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्रीच्छन्दः । श्रीमहागणपतिर्देवता । ॐ गं गणपतये नमः । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् । एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदञ्च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः । नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्नविनाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥

ॐ सहनाववतु । सहनौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषावहै ॥

ॐ शान्तिः, शान्तिः, शान्तिः ॥ ॐ श्रीमन्महागणाधिपतये नमः ॥

ततो वामहस्तेन गौरसर्षपान् गृहीत्वा दक्षिणहस्तेन दिक्षु प्रक्षिपेत्-

ॐ रक्षोहणंव्वलगहनंवैष्णवीमिदमहन्तंव्वलगमुत्त्किरामि यम्मे निष्टयो
यममात्त्यो निचखानेदमहन्तंव्वलगमुत्किरामि यम्मे समानो यमसमानो
निचखानेदमहन्तंव्वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्न्निचखानेदमहन्तं
व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥ ५।२३

ततो वामपादेन भूमिं त्रिवारं ताडयेत् । उदकस्पर्शः ॥

**ततो हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा मङ्गलमन्त्रान् पठेयुः-**

हरिः ॐ स्वस्ति नऽइन्द्रो व्वृद्धश्श्रवाꣳ स्वस्ति नः पूषा व्विश्श्ववेदाꣳ ।
स्वस्ति नस्ताक्क्ष्र्योऽअरिष्टनेमिꣳ स्वस्ति नोबृहस्प्पतिर्द्दधातु ॥२५।१९
भद्द्रङ्कर्णेभिꣳश्रृणुयाम देवा भद्द्रम्पश्श्येमाक्षभिर्य्यजत्राꣳ ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितंय्यदायुः ॥२५।२१
द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापꣳ शान्तिरोषधयꣳ शान्तिः ॥
व्वनस्प्पतयꣳ शान्तिर्व्विश्श्वे देवाः शान्तिर्ब्रह्मशान्तिꣳ सर्व्वꣳ शान्तिꣳ
शान्तिरेव शान्तिꣳसा मा शान्तिरेधि ॥ ३६।१७
गणानान्त्वा गणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ
हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसोमम ॥
आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥ २३।१९
व्विश्श्वानि देवसवितर्दुरितानि परासुव ॥ यद्भद्द्रन्तन्नऽआसुव ॥

ॐ श्रीमन्महागणाधिपतये नमः ॐ लक्ष्मीनारायणाभ्यां नमः ॐ उमामहेश्वराभ्यां नमः
ॐ वाणीहिरण्यगर्भाभ्यां नमः ॐ शचीपुरन्दराभ्यां नमः ॐ मातापितृचरणकमलेभ्यो नमः
ॐ इष्टदेवताभ्यो नमः ॐ कुलदेवताभ्यो नमः ॐ ग्रामदेवताभ्यो नमः
ॐ स्थानदेवताभ्यो नमः ॐ वास्तुदेवताभ्यो नमः ॐ सर्वेभ्यो देवेभ्यो नमः
ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ।

**ततो हस्तेजलाक्षतद्रव्याणि गृहित्वा स्वर्णपात्रे सङ्कल्प ः**

हरिः ॐ तत्सत् ३ ॐ विष्णुर्विष्णुर्विष्णुः स्वस्तिश्रीसमस्त- जगदुत्पत्ति-स्थिति-लय-कारणस्य रक्षा-शिक्षा-विचक्षणस्य, प्रणतपारिजातस्य, अशेषपराक्रमस्य, श्रीमदनन्तवीर्यस्यादि- नारायणस्य, अचिन्त्यापरिमितशक्त्याध्रियमाणानां महाजलौघमध्ये परिभ्रमताम् अनेककोटि-ब्रह्माण्डानाम् एकतमे, अव्यक्त-महदहङ्कार-पृथिव्यप्तेजो-वाय्वाकाशाद्यावरणैरावृते अस्मिन् महति ब्रह्माण्डखण्डमध्ये, आधारशक्ति-श्रीमदादिवाराह-द्रंष्ट्राग्रविराजिते, कूर्मानन्त-वासुकि-तक्षक-कुलिक-कर्कोटक-पद्म- महापद्म-शंखाद्यष्ट-महानागैर्ध्रियमाणे ऐरावत-पुण्डरीक-वामन-कुमुदाञ्जन- पुष्पदन्त-सार्वभौम-सुप्रतीकाष्ट-दिग्गजोपरिप्रतिष्ठितानाम् अतल-वितल- सुतल-तलातल-रसातल-महातल-पातालाख्य-सप्तलोकानामुपरिभागे पुण्यकन्निवासभूतभूर्लोक-भुवर्लोक-स्वर्लोक-महर्लोक-जनर्लोक-तपोलोक- सत्यलोकाख्य-सप्तलोकानां मध्ये, चक्रवाल-शैल-महावलयनां, मध्यवर्तिनो, महाकाल-महाफणिराजशेषस्य सहस्रफणामणि-मण्डलमण्डिते, दिग्दन्तिशुण्डादण्डोद्दण्डिते, अमरावत्यशोकवती-भोगवती-सिद्धवती- गान्धर्ववती-काञ्ची-अवन्ती-अलकावती-यशोवतीति पुण्यपुरीप्रतिष्ठिते लोकालोकाचल-वलयिते लवणेक्षु-सुरा-सर्पि-र्दधि-क्षीरोदकार्णव-परिवृते जम्बू-प्लक्ष-कुश-क्रौञ्च-शाक-शाल्मलि-पुष्कराख्य-सप्तद्वीपयुते इन्द्र- कांस्य-ताम्र-गभस्ति-नाग-सौम्य-गन्धर्व-चारण-भारतेति-नवखण्डमण्डिते, सुवर्णगिरि-कर्णिकोपेत-महासरोरूहाकार-पञ्चाशत्कोटि-योजनविस्तीर्णे, भूमण्डले अयोध्या-मथुरा-माया-काशी-काञ्ची-अवन्तिकापुरी-द्वारावतीति- मोक्षदायक-सप्तपुरीप्रतिष्ठिते, सुमेरू-निषध-त्रिकूट-रजतकूटाम्रकूट- चित्रकूट-हिमवद्विन्ध्याचलादि महापर्वतप्रतिष्ठिते, नवसहस्र-योजनविस्तीर्णे, मलयाचल-सह्याचल-विन्ध्याचलानामुत्तरे, स्वर्णप्रस्थ-चण्डप्रस्थ-चान्द्र- सूक्तावन्तक-रमणक-महारमणक-पाञ्चजन्य-सिंहललङ्केति-नवखण्डमण्डिते, गङ्गा-भागीरथी-गोदावरी-क्षिप्रा-यमुना-सरस्वती-नर्मदा-ताप्ती-कर्णाली- चन्द्रभागा-कावेरी-पयोष्णी-कृष्णा-वेणी-भीमरथी-तुङ्गभद्रा-ताम्रपर्णी- विशालाक्षी-चर्मणवती-वेत्रावती-कौशिकी-गण्डकी-विश्वामित्री-वाग्मती- सरयू-करतोया-ब्रह्मानन्देत्यनेकपुण्यनदीविराजिते, दण्डक-विन्ध्यक- चम्पक-बदरिक-महीलाङ्गुलेक्षुक-नैमिष-कदलिक-देवदार्वाख्यदशारण्ययुते, भारतवर्षे, भरतखण्डे जम्बूद्वीपे आर्यावर्तैक-देशान्तर्गत- हिमवत्खण्डैकदेशे मेरोः पूर्वदिग्भागे, शिवधाम-सगरमाथा-कैलाश- गौरीशङ्करादि हिमगिरि विराजिते, नेपालदेशे, श्रीवैद्यनाथ-मुक्तिनाथ- पशुपतिनाथ-वराहनाथाख्यचतुर्धामाख्यक्षेत्रमध्ये.......क्षेत्रे सकल- देवतानां

निवासभूमौ तपोभूमौ वेदभूमौ श्रीभगवतोमहापुरूषस्य नाभि सरोरूहात्प्रवर्तमानस्य सकलजगत्स्रष्टुः परार्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे रथन्तरादि-द्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे, प्रथमे वर्षे, प्रथमे मासे, प्रथमे पक्षे, प्रथमे दिवसे, अह्नस्तृतीयेयामे, तृतीये मुहूर्ते स्वायम्भुव-स्वारोचिषोत्तम-तामस-रैवत-चाक्षुषाख्येषु षट्सु मनुषु व्यतीतेषु सप्तमे वैवश्वतमन्वन्तरे, कृत-त्रेता-द्वापर-कलिसंज्ञकानां चतुर्णां युगानां मध्ये, वर्तमाने अष्टाविंशतितमे कलियुगे, कलेः प्रथमचरणे, चान्द्र- सौर-सावनमानानां प्रभवादि-षष्टिसम्वत्सराणां मध्ये ..............नाम्नि- सम्वत्सरे, श्रीसूर्ये ..............अयने, ..............ऋतौ, ..............मासे, ..............पक्षे, ..............तिथौ, ..............वासरे ,..............नक्षत्रे, ..............योगे, ..............करणे, ..............राशिस्थिते चन्द्रमसि, ..............राशिस्थिते श्रीसूर्ये, ..............राशिस्थिते देवगुरौ, अन्येषु शेषेषु ग्रहेषु यथायथा-राशिस्थानस्थितेषु सत्सु एवं ग्रहगण-गुण-विशेषेण- विशिष्टायां पुण्यायां महापुण्यतिथौ............प्रदेशस्य,............नगरे/ग्रामे श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं, विशेषतः सर्वेषाम् विश्ववास्तव्यानां जनानां क्षेम-स्थैर्य- धैर्य-वीर्य- विजयाभय- आयुरारोग्य-आनन्दोल्लासप्राप्त्यर्थं, आध्यात्मिकाधिदैविकाधिभौतिकेतितापत्रयनिवारणपूर्वकं, धर्मार्थकाममोक्षादिचतुर्विधपुरूषार्थसिध्यर्थं, श्रीसाम्बसदाशिवस्य पूर्णानुग्रहप्राप्त्यर्थं, श्रीमन्महर्षेः वैदिकविश्वप्रशासनस्य समस्तकल्याणकारीमनोरथानां परिपूर्तये, समस्तासु विश्वचेतनासु सत्वगुणसम्बर्द्धनपूर्वकं विश्वस्यप्रतिदेशं, प्रतिनगरं, प्रतिग्रामं, प्रतिगृहं, श्रीशिवकृपाप्रसादात् उत्तरोत्तरमहरहः समुद्बोधनयोग्यताऽजयेताभिवृध्यर्थं, तथा च परमपूज्य-महर्षिमहेशयोगिवर्यैः संस्थापितस्य, महर्षिवैदिकविश्वप्रशासनस्य, महर्षिवैदिकविश्वप्रशासकस्य, महर्षिविश्वव्यापिरामराज्यस्य, महर्षिविश्वशान्तिराष्ट्रस्य तथा सर्वेषां विश्वव्यापीनां, महर्षिसंस्थानां, सर्वेषां गुरूकुलानां, तत्सहयोगदातॄणां सर्वेषां च सर्वतोमुखसर्वाङ्गीणसर्वविधविकासविस्तारसफलतापूर्वकोत्तरकर्मणि, निर्बिघ्नता प्राप्त्यर्थं, सर्वारिष्टनिरसनपूर्वकविश्वशान्त्यर्थं, सर्वश्रेयलाभार्थं, नेपाल- महर्षि-वैदिक-प्रतिष्ठानेन सञ्चालितानां कार्याणां चिरकालं यावद् नैरन्तर्यार्थं "महर्षिवैदिकविश्वप्रशासनं विजयतेतराम्, महर्षिविश्वव्यापिरामराज्यम् विजयतेतराम्, महर्षिविश्वशान्तिराष्ट्रम् विजयतेतराम्" इति संकल्प सिध्यर्थं, अथापि प्राकृतिकानां शिवमय-नियमायां सुसञ्चालनाय, विश्वशान्त्यै च शुद्धब्रह्मपरात्परश्रीशिवप्रीतिकामाः वयं आदौ अर्घ-घण्टाशंखादि- दीप-कलश-गणेश-वरूणदेवता-नवदुर्गा-शालग्राम-नवग्रह-रक्षासूत्र- शिवपरिवाराणां च पूर्वाङ्गानुकल्पेन तत्तद्देवतापूजनपूर्वकं यथामिलितोपचारैः साम्बसादाशिवपूजनं, श्रीसाम्बसदाशिवोपरि ......(दुग्ध) मिश्रिताविच्छिन्नजलधारया नैपालक गुरुकुलच्छात्रैः क्रियमाणं नेपालाधिराज्यव्यापि महारूद्राभिषेकपाठं, तथा च एकऽस्मिन् स्थाने प्रत्यहं रुद्रस्वाहाकारविधिना तत्तद्दशांशहोमं, तर्पणं, मार्जनं, श्रीदुर्गासप्तशतीपाठं, श्रीविष्णुसहस्रनाम-स्तोत्रपाठं, तदङ्गत्वेन उत्तराङ्गपूजनं तथा च नानानाम-गोत्रोत्पन्ना एकत्रिंशदधिकशतत्रयोत्तरैकसहस्रसख्यकाब्राह्मणाः विश्वक समवेता

एकस्मिन्नेव समये सामूहिकरूपेण तत्तद्गुरुकुलेषु सहैव करिष्यामहे ॥ ॐ अयं शुभसङ्कल्पः सुसिद्धोऽस्तु । सर्वम् शुभं भवतु । शुभमस्तुसर्वेषाम् । ॐ तत्सत् ।

ॐ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ॥
दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३४।०१

## ततः अर्घ्यपूजनम्

अङ्कुशमुद्रया देवान् आवाह्य- ॐ ह्रां ह्रीं ह्रौं सः आधारशक्तिकमलासनाय नमः, ॐ पृथिव्यै नमः, ॐ अं द्वादशकलात्मने अर्कमण्डलाय नमः, ॐ उं षोडशकलात्मने चन्द्रमण्डलाय नमः, ॐ मं दशकलात्मने वह्निमण्डलाय नमः, ॐ सामान्यार्घ्याय नमः, ॐ अर्घ्यपात्राय नमः । धेनुमुद्रया अमृतीकृत्य-

ॐ कोऽसि कतमोसि कस्मै त्वाकाय त्वा ॥ सुश्लोक सुमङ्गल सत्यराजन् ॥ २०।०४

ततो मत्स्यमुद्रया आच्छाद्य दशवारं प्रणवं जपेत् । ॐ............

## ततः सूर्यार्घ्यदानम्

ॐ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥३३।४३

ॐ भूर्भुवः स्वः घृणि सूर्याय नमः, अर्घ्यं समर्पयामि, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततो-

## घण्टापूजनम्

ॐ सुपर्णोऽसि गरुत्माँस्त्रिवृते शिरो गायत्रञ्चक्षुर्ब्बृहद्रथन्तरे पक्षौ ॥
स्तोमऽआत्मा च्छन्दाꣳस्यङ्गानि यजूꣳषि नाम ॥
साम ते तनूर्व्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः ॥
सुपर्णोऽसि गरुत्मान्दिवङ्गच्छ स्वः पत ॥ १२।०४

ॐ भूर्भुवः स्वः श्रीघण्टास्थगरुडदेवाय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततः-

## शङ्खपूजनम्

ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ २६।०९
ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नो शङ्खः प्रचोदयात् ॥

ॐ भूर्भुवः स्वः श्रीशङ्खस्थनारायणाय नमः, सर्वोपचारार्थे तिलतुलसीदलं समर्पयामि । ततो-

## दीपपूजनम्

ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्याम्पृष्टो विश्श्वाऽओषधीराविवेश ।
वैश्श्वानरः सहसा पृष्टोऽअग्निः स नो दिवा स रिषस्पातु नक्तम् ॥ १८ ॥६३

ॐ भूर्भुवः स्वः श्रीदीपस्थनारायणाय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततः-

## श्रीगणेशाम्बिकयोः पूजनम्

तत्रादौ ध्यानम्

ॐ गणानान्त्वा गणपतिᳬ हवामहे प्प्रियाणान्त्वा प्प्रियपतिᳬ
हवामहे निधीनान्त्वा निधिपतिᳬ हवामहे व्वसो मम ॥
आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥२३।१९

ॐ अम्बेऽअम्बिकेम्बालिके न मा नयति कश्चन ।
ससस्त्यश्श्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥२३।१८

ॐ भूर्भुवः स्वः श्रीगणेशाम्बिकाभ्यां नमः, श्रीगणेशाम्बिकाभ्यां ध्यायामि । आवाहयामि, आसनं समर्पयामि, पादयोः पाद्यं समर्पयामि, हस्तयोः अर्घ्यं समर्पयामि, मुखे आचमनीयं समर्पयामि, सर्वाङ्गेषु स्नानीयं समर्पयामि, पञ्चामृतस्नानं समर्पयामि, शुद्धोदकस्नानं समर्पयामि, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततः

## कलशपूजनम्

ॐ तत्त्वा यामि ब्ब्रह्म्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः ।
अहेडमानो व्वरुणेह बोद्धचुरुशᳬ समा नऽआयुः प्प्रमोषीः ॥२१।०२

ॐ भूर्भुवः स्वः श्रीकलशस्थवरुणदेवाय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।

**ततः कलशे गङ्गादितीर्थानि आवाहयेत्**

ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्क्कम्भसर्ज्जनी स्त्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ॥४।३६

**ततः कलशं स्पृष्ट्वाऽभिमन्त्रयेत्**

ॐ अग्गिनर्द्देवता व्वातो देवता सूर्य्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्रा देवताऽदित्या देवतामरुतो देवता व्विश्श्वे देवा देवताबृहस्पतिर्द्देवतेन्द्रो देवता व्वरुणो देवता ॥१४।२०

**ततः प्रार्थना**

ॐ समुद्रस्य त्वावकयाग्ने परिव्व्ययामसि । पावकोऽ अस्म्मब्भ्यᳬ शिवो भव ॥१७।०४

ॐ भूर्भुवः स्वः श्रीकलशस्थवरुणदेवाय नमः, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततः-

## दुर्गापूजनम्

ॐ देवीर्द्वारऽइन्द्रᳬ सङ्घाते वीड्वीर्य्यामन्नवर्द्धयन् । आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणᳬ रेणुकककाटन्नुदन्तांवसुवने वसुधेयस्य व्यन्तु यज ॥२८।१३॥

ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपायै त्रिगुणात्मिकायै दुर्गादेव्यै नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततः-

**शालग्रामपूजनम्**

ॐ इदंव्विष्णुर्व्विचक्क्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाᳬसुरे स्वाहा ॥५।१५

ॐ भूर्भुवः स्वः श्रीविष्णवे नमः, सर्वोपचारार्थे तिलतुलसीदलं समर्पयामि, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि, ॐ नमो भगवते वासुदेवाय । ततः

## श्रीसूर्यादिनवग्रहपूजनम्

**सूर्यः** – ॐ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥३३।४३
ॐ भूर्भुवः स्वः श्रीसूर्यपिङ्गलाभ्यां नमः, आवाहयामि, स्थापयामि ।

**सोमः** – ॐ इमन्देवाऽअसपत्नꣳ सुवध्वम्महते क्षत्राय महते ज्ज्यैष्ठ्याय महते जानराज्ज्यायेन्द्रस्येन्द्रियाय । इमममुष्ष्य पुत्रममुष्ष्यै पुत्रमस्यै व्विशऽएष वोमी राजा सोमोऽस्माकम्ब्राह्मणानाꣳराजा ॥१०।१८
ॐ भूर्भुवः स्वः सोममङ्गलाभ्यां नमः, आवाहयामि, स्थापयामि ।

**भौमः** – ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाꣳरेताꣳसिजिन्वति ॥ १३।१४
ॐ भूर्भुवः स्वः भौमभ्रामरीभ्यां नमः, आवाहयामि, स्थापयामि ।

**बुधः** – ॐ उद्बुद्ध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते सꣳसृजेथामयञ्च ।
अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥ १८।६१
ॐ भूर्भुवः स्वः बुधभद्रिकाभ्यां नमः, आवाहयामि, स्थापयामि ।

**बृहस्पतिः** – ॐ बृहस्पते ऽअति यदर्य्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसऽऋतप्प्रजाततदस्म्मासु द्रविणन्धेहि चित्रम् ॥
उपयामगृहीतोऽ सिबृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा ॥२६।०३
ॐ भूर्भुवः स्वः गुरुधान्यकाभ्यां नमः, आवाहयामि, स्थापयामि ।

**शुक्रः** – ॐ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः ।
ऋतेन सत्यमिन्द्रियम्विपानꣳ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥१९।७५
ॐ भूर्भुवः स्वः शुक्रसिद्धाभ्यां नमः, आवाहयामि, स्थापयामि ।

**शनिः** – ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥३६।१२
ॐ भूर्भुवः स्वः शनिउल्काभ्यां नमः, आवाहयामि, स्थापयामि ।

**राहुः** – ॐ कया नश्चित्रऽआभुवदूती सदावृधः सखा ॥ कया शचिष्ठया व्वृता ॥३६।०४
ॐ भूर्भुवः स्वः राहुशङ्कटाभ्यां नमः, आवाहयामि, स्थापयामि ।

**केतुः** – ॐ केतुङ्कृण्वन्नकेतवे पेशो मर्य्याऽअपेशसे । समुषद्भिरजायथाः ॥२९।३७
ॐ भूर्भुवः स्वः केतुविकटाभ्यां नमः, आवाहयामि, स्थापयामि ।

ततः पादयोः पाद्यं समर्पयामि, हस्तयो अर्घ्यं समर्पयामि, मुखे आचमनीयं समर्पयामि, सर्वाङ्गेषु स्नानीयं समर्पयामि, पञ्चामृतस्नानं समर्पयामि, शुद्धोदकस्नानं समर्पयामि, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।

**ततः प्रार्थना**

ॐ ग्रहाऽऊर्ज्जाहुतयो व्यन्तो विप्प्राय मतिम् । तेषांव्विशिप्प्रियाणांव्वोहमिषमूर्ज्जꣳ समग्ग्रभमुपयामगृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । सम्पृचौ स्त्थꣳसम्मा भद्रेण पृङ्क्तंव्विपृचौ स्थो व्वि मा पाप्मनापृङ्क्तम् ॥ ९।४

ॐ भूर्भुवः स्वः श्रीसूर्यादिनवग्रहेभ्यो नमः, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि ॥ ततः-

## रक्षाबन्धनपूजनम्

ॐ सप्तऽऋषयꣳ प्रतिहिताꣳ शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापꣳस्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥३४।५५

ॐ भूर्भुवः स्वः श्रीरक्षासूत्रस्थदेवताभ्यो नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततः-

## कलशस्कन्धप्रदेशे पूजनम्

ॐ गणपत्यादिपञ्चायतनदेवताभ्यो नमः ।
ॐ सूर्यादिनवग्रहेभ्यो नमः ।
ॐ अग्न्यादिप्रत्यधिदेवेभ्यो नमः ।
ॐ ध्रुवाद्यष्टवसुभ्यो नमः ।
ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः ।
ॐ आवहादिसप्तमरुद्भ्यो नमः ।
ॐ विनायकादिपञ्चलोकपालेभ्यो नमः ।
ॐ ईश्वराद्यधिदेवेभ्यो नमः ।
ॐ इन्द्रादिदशदिक्पालेभ्यो नमः ।
ॐ धात्रादिद्वादशादित्येभ्यो नमः ।
ॐ गौर्यादिषोडशमातृकाभ्यो नमः ।
ॐ विनायकब्रह्मविष्णुरुद्रार्कवनस्पतिभ्यो नमः । ततः

## शिवपरिवारस्य पूजनम्

तत्रादौ- पश्चिमे **नन्दीश्वरपूजनम्**

ॐ भूर्भुवः स्वः श्रीनन्दीश्वराय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततो-

दक्षिणे **वीरभद्रपूजनम्**

ॐ भूर्भुवः स्वः श्रीवीरभद्राय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततः-

उत्तरे **कुबेरपूजनम्**

ॐ भूर्भुवः स्वः श्रीकुबेराय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततः-

आग्नेये **कार्तिकेयपूजनम्**

ॐ भूर्भुवः स्वः श्रीकार्तिकेयाय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततः-

**दक्षिणाग्नेययोर्मध्ये कीर्तिमुखपूजनम्**

ॐ भूर्भुवः स्वः श्रीकीर्तिमुखाय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततो-

**मध्ये नागराजपूजनम्**

ॐ भूर्भुवः स्वः श्रीनागराजाय नमः, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । ततः-

## प्रधानदेवतापूजनम्

### तत्रादौ-ध्यानम्

ॐ शिवो भव प्रजाब्भ्यो मानुषीब्भ्यस्त्वमङ्गिरꣳ ॥
मा द्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षम्मा व्वनस्प्पतीन् ॥११।४५

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः, शिवं ध्यायामि । ध्यानान्ते-

### आवाहनम्

ॐ नमस्ते रुद्र मन्न्यवऽउतो तऽइषवे नमः ॥ बाहुब्भ्यामुत ते नमः ॥१६।१

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः, शिवं आवाहयामि । आवाहनान्ते-

### आसनम्

ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी ॥
तया नस्तन्न्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥१६।२

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः, आसनं समर्पयामि । आसनान्ते पादयोः-

### पाद्यम्

ॐ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥
शिवाङ्गिरित्र ताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् ॥१६।३

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, पादयोः पाद्यं समर्पयामि । ततो हस्तयोः-

### अर्घ्यम्

ॐ शिवेन व्वचसा त्त्वा गिरिशाच्छा व्वदामसि ॥
यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमनाऽअसत् ॥१६।४

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, हस्तयोः अर्घ्यं समर्पयामि । ततो मुखे-

### आचमनीयम्

ॐ अद्ध्यवोचदधिवक्क्ता प्प्रथमोदैव्व्योभिषक् ॥
अहीँश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च्च यातुधान्न्योऽधराचीः परासुव ॥१६।५

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, मुखे आचमनीयं समर्पयामि । ततः सर्वाङ्गेषु-

### स्नानीयम्

ॐ असौ यस्ताम्म्रोऽअरुणऽउत बब्भ्रुः सुमङ्गलः ॥
ये चैनꣳरुद्राऽअभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेडऽईमहे ॥१६।६

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, सर्वाङ्गेषु स्नानीयं समर्पयामि । ततः-

### पयःस्नानम्

ॐ पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ।
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥१८।३६

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, पयःस्नानं समर्पयामि, पयःस्नानान्ते शुद्धोदकस्नानं समर्पयामि । ततो-

### दधिस्नानम्

ॐ दधिक्क्राव्णोऽअकारिषञ्जिष्णोरश्वस्य व्वाजिनः ।
सुरभि नो मुखा करत्प्रणऽआयूꣳषि तारिषत् ॥२३।३२

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, दधिस्नानं समर्पयामि, दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि । ततो-

### घृतस्नानम्

ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्म्वस्य धाम ।
अनुष्ष्वधमावह मादयस्व स्वाहाकृतंव्वृषभ व्वक्षि हव्व्यम् ॥१७।८८

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, घृतस्नानं समर्पयामि, घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । ततो-

### मधुस्नानम्

ॐ मधु व्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्न्नः सन्त्वोषधीः ॥ १३।२७
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधु द्यौरस्तु नः पिता ॥
मधुमान्नो व्वनस्प्पतिर्म्मधुमाँऽ अस्तु सूर्य्यः । माध्वीर्गावो भवन्तुनः ॥१३।२८

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, मधुस्नानं समर्पयामि, मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि । ततः-

### शर्करास्नानम्

ॐ अपाꣳरसमुद्द्वयसꣳसूर्य्ये सन्तꣳसमाहितम् ।
अपाꣳरसस्य यो रसस्तंव्वो गृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्राय त्वा
जुष्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ०९।३

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, शर्करास्नानं  समर्पयामि, शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि । ततः-

## पञ्चामृतस्नानम्

ॐ पञ्चनद्यः सरस्वती मपियन्तिसस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेभवत्सरित् ॥ ३४।११

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, पञ्चामृतस्नानं  समर्पयामि, पञ्चामृतस्नानान्ते-

## शुद्धोदकस्नानम्

ॐ शुद्धवालः सर्व्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्ते
रुद्राय पशुपतये कर्ण्णा यामाऽअवलिप्ता रौद्रा नभोरूपाः पार्ज्जन्याः ॥ २४।३

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, शुद्धोदकस्नानं समर्पयामि । ततः-

## धूपं दीपम् च

ॐ ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यःकृतः ॥
ऊरूतदस्य यद्वैश्यः पद्भ्याꣳशूद्रोऽअजायत ॥३१।११
ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ॥
श्रोत्राद्वायुश्च्च प्राणश्च्च मुखादग्निरजायत ॥३१।१२

ॐ भूर्भुवःस्वः श्रीआवाहितेभ्यः पूजितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, धूपमाघ्रापयामि, प्रत्यक्षदीपं दर्शयामि, धूपदीपान्ते आचमनीयं समर्पयामि । ततो हस्तौ प्रक्षाल्य-

## नैवेद्यम्

ॐ नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत ॥
पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽअकल्प्ययन् ॥३१।१३

ॐ भूर्भुवःस्वः श्रीआवाहितेभ्यः पूजितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, अमृतनैवेद्यं निवेदयामि ।

## इति पूर्वाङ्गपूजनम्

# उत्तराङ्गपूजनम्

## शुद्धोदकस्नानम्

ॐ शुद्धवालꣳ सर्व्वशुद्धवालो मणिवालस्तऽआश्विना? श्येत÷ श्येताक्षोऽरुणस्ते
रुद्राय पशुपतये कर्ण्णा यामाऽअवलिप्ता रौद्रा नभोरूपा÷ पार्ज्जन्या? ॥ २४।३

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः, शुद्धोदकस्नानं समर्पयामि, शुद्धोदकस्नानान्ते-

## वस्त्रम्

ॐ असौ योऽवसर्प्पति नीलग्ग्रीवो व्विलोहितꣳ ॥
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यꣳ स दृष्टो मृडयाति नꣳ ॥१६।०७

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, वस्त्रं समर्पयामि ॥ वस्त्रान्ते आचमनीयं समर्पयामि । ततः-

## यज्ञोपवीतम्

ॐ नमोस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो येऽअस्य सत्त्वानोहन्तेब्भ्योकरन्नम÷ ॥१६।८

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, यज्ञोपवीतं समर्पयामि ॥ यज्ञोपवीतान्ते आचमनीयं समर्पयामि । ततः-

## उपवस्त्रम्

ॐ सुजातो ज्ज्योतिषा सह शर्म्म व्वरूथमासदत्स्व÷ ।
व्वासोऽअग्ग्ने व्विश्श्वरूपꣳ संव्व्ययस्व व्विभावसो ॥११।४०

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, उपवस्त्रं समर्पयामि ॥ उपवस्त्रान्ते आचमनीयं समर्पयामि । ततः-

## गन्धः

ॐ प्प्रमुञ्च धन्न्वनस्त्वमुभयोरात्क्न्योर्ज्ज्याम् ॥
याश्चते हस्तऽइषवः पराताभगवो व्वप ॥१६।९

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः, गन्धानुलेपनं समर्पयामि ॥ गन्धान्ते-

## भस्मः

ॐ प्रसद्य भस्म्मना योनिमपश्च पृथिवीमग्ग्ने ।
सꣳसृज्ज्य मातृभिष्ट्वञ्ज्योतिष्म्मान्पुनरासदꣳ ॥ १२।३८

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः, भस्मं लेपयामि ॥ भस्मान्ते-

## अक्षताः

ॐ अक्षन्नमीमदन्त ह्यव प्प्रियाऽअधूषत ।

अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥३।५१
ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, अक्षतान् समर्पयामि ॥ अक्षतान्ते-

## पुष्पाणि

ॐ विज्ज्यन्धनुः कपर्दिनोविशल्ल्योबाणवाँ२॥ उत ॥
अनेशन्नस्ययाऽइषवऽआभुरस्य निषङ्गधिः ॥१६॥१०
ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः,पुष्पाणि समर्पयामि ॥ पुष्पान्ते-

## बिल्वपत्राणि

ॐ नमो बिल्मिने च कवचिने च नमो वर्म्मिणे च वरूथिने च नमः
श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥१६।३५
ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, बिल्वपत्राणि समर्पयामि ॥ बिल्वपत्रान्ते-

## नानापरिमलद्रव्याणि

ॐ अहिरिव भोगैः पर्य्येति बाहुञ्ज्याया हेतिम्परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाँ सम्परिपातु विश्वतः ॥ २९।५१
ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, नानापरिमलद्रव्याणि समर्पयामि ॥ ततः -

## सुगन्धितद्रव्यम्

ॐ त्र्यम्बकंयजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥
उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् ॥३।६०
ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, सुगन्धितद्रव्यं समर्पयामि ॥ ततः-

## धूपः

ॐ याते हेतिर्म्मीढुष्टमहस्ते बभूव ते धनुः ॥
तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥१६।११
ॐ धूरसि धूर्व्व धूर्व्वन्तन्धूर्व्व तंयोऽस्मान्धूर्व्वति तन्धूर्व्व यंव्वयन्धूर्व्वामः ।
देवानामसि वह्नितमं सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ १।८
ॐ भूर्भुवःस्वः श्रीआवाहितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, धूपमाघ्रापयामि धूपान्ते-

## प्रत्यक्षदीपः

ॐ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ॥
अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् ॥१६।१२

ॐ भूर्भुवःस्वः श्रीआवाहितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, प्रत्यक्षदीपं दर्शयामि ॥ धूपदीपान्ते आचमनीयं समर्पयामि । ततो हस्तौ प्रक्षाल्य-

## नैवेद्यम्

ॐ अवतत्यधनुष्ट्वꣳ सहस्राक्षशतेषुधे ॥
निशीऽर्य्यशल्ल्यानाम्मुखाशिवोनः सुमनाभव ॥

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, नैवेद्यं समर्पयामि ॥ नैवेद्यान्ते-

## पञ्चग्रासमुद्राः

ॐ प्राणाय स्वाहा ।
ॐ अपानाय स्वाहा ।
ॐ व्यानाय स्वाहा ।
ॐ समानाय स्वाहा ।
ॐ उदानाय स्वाहा ।

ॐ मध्ये मध्ये पानीयम् आचमनीयं जलं समर्पयामि, उत्तरापोशानं समर्पयामि ॥ ततः-

## करोद्वर्तनार्थे चन्दनम्

ॐ अꣳशुना ते ऽ अꣳशुः पृच्च्यताम्परुषा परुः ।
गन्धस्ते सोममवतु मदाय रसोऽअच्च्युतः ॥ २०।२७

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, करोद्वर्तनार्थे चन्दनं समर्पयामि ॥ ततः-

## ऋतुफलम्

ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पा याश्च्च पुष्पिणीः ॥
बृहस्प्पतिप्प्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ १२।८९

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, ऋतुफलं समर्पयामि ॥ ऋतुफलान्ते-

## ताम्बूलम्

ॐ नमस्तऽआयुधायानातताय धृष्णवे ॥
उभाब्भ्यामुतते नमो बाहुब्भ्यान्तवधन्वने ॥१६।१४

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, ताम्बूलं समर्पयामि ॥ ततः

## अखण्डश्रीफलम्

ॐ पूर्णा दर्व्वि परापत सुपूर्णा पुनरापत ।
व्वस्नेव व्विक्क्रीणावहाऽइषमूर्ज्जꣳ शतक्क्रतो ॥३।४९

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, सङ्कल्पितकर्मणः परिपूर्णार्थम् अखण्डश्रीफलं समर्पयामि ॥ ततः-

## हिरण्यदक्षिणाद्रव्यम्

ॐ हिरण्यगर्भः समवर्त्तताग्ग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ् कस्म्मैदेवाय हविषा विधेम ॥ २३।१

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, कृतायाः पूजायाः साद्गुण्यार्थे हिरण्यदक्षिणाद्रव्यं समर्पयामि ॥ ततः-

## प्रसन्नार्घ्यम्

ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः । ततो विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥ ३१।४

ॐ भूर्भुवः स्वः श्रीगणेशाम्बिकाभ्यां नमः, श्रीभगवते साम्बसदाशिवाय नमः, प्रसन्नार्घ्यं समर्पयामि ॥ ततः-

## प्रार्थना

ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥
मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥१६।१६

ॐ भूर्भुवःस्वः श्रीभगवते साम्बसदाशिवाय नमः, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततः-

## आरार्तिक्यम्

ॐ आ रात्रि पार्थिवꣳ रजः पितुरप्प्रायि धामभिः ।
दिवः सदाꣳसि बृहती विवितिष्ठसऽआ त्वेषंव्वर्त्ततेतमः ॥३४।३२
ॐ इदꣳ हविः प्प्रजननम्मेऽअस्तु दशव्वीरꣳ सर्व्वगणꣳ स्वस्तये ॥ आत्मसनि प्प्रजासनि पशुसनि लोकसन्न्यभयसनि । अग्ग्निः प्प्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्म्मासुधत्त ॥ १९।४८
ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥ ३।९

ॐ भूर्भुवःस्वः श्रीगणेशाम्बिकाभ्यां नमः, श्रीआवाहितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, कर्पूरारार्तिक्यं समर्पयामि ॥

## आरार्तिक्यग्रहणम्

जलेन शीतलीकरणम् ॥ पुष्पैर्देवाभिवन्दनम् ॥ आरोग्यार्थे आत्माभिवन्दनम् ॥
ततो हस्तौ प्रक्षाल्य-

## मन्त्रपुष्पाञ्जलिः

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥
ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः ॥३१।१६
ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे ।
स मे कामान्काम कामाय मह्यं कामेश्वरो वैश्रवणो ददातु ॥
कुबेराय वैश्रवणाय महाराजाय नमः ॥
ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुषऽआन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्तायाऽएकराडिति तदप्येषश्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥
ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥
सम्बाहुब्भ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽएकः ॥१७।१९
ॐ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥
ॐ कात्यायन्यै च विद्महे कन्याकुमार्यै च धीमहि । तन्नो दुर्गा प्रचोदयात् ॥
ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥
ॐ भाष्कराय विद्महे दिवाकराय धीमहि । तन्न सूर्यः प्रचोदयात् ॥
ॐ महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥
ॐ सरस्वत्यै च विद्महे विद्यादात्र्यै च धीमहि । तन्नो वाणी प्रचोदयात् ॥
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

ॐ भूर्भुवःस्वः श्रीगणेशाम्बिकाभ्यां नमः, श्रीआवाहितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, मन्त्रपुष्पाञ्जलिं समर्पयामि । ततः-

## शिवस्य अर्धप्रदक्षिणा

ॐ ये तीर्त्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥
तेषाꣳसहस्रयोजनेव धन्वानि तन्मसि ॥ १६।६१

## प्रार्थना

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ
हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसो मम ॥
आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥२३।१९
ॐ आ कृष्णेन रजसा व्वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥३३।४३
ॐ देवीर्द्वारऽइन्द्रꣳ सङ्घाते वीड्वीर्य्यामन्नवर्द्धयन् । आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाणꣳ रेणुकककाटन्नुदन्तांवसुवने वसुधेयस्य व्यन्तु यज ॥ २८।१३
ॐ इदंव्विष्णुर्व्विचक्क्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरे स्वाहा ॥५।१५
ॐ नमः शम्भवाय च मयोभवाय च नमःशङ्कराय च

मयस्क्कराय च नमःशिवाय च शिवतराय च ॥ १६।४१
ॐ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ ऋग्वेद १।१
ॐ इषेत्त्वा । इषे त्त्वोर्ज्जे त्त्वा व्वायव स्स्थ देवो वःसविता प्प्रार्प्पयतु श्श्रेष्ठतमाय कर्म्मणऽ आप्प्यायद्ध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मा मा वस्तेनऽईशत माघशꣳसो द्ध्रुवाऽअस्मिन्गोपतौ स्यातबह्वीर्य्यजमानस्य पशून्पाहि ॥ शु.यजुर्वेद १।१
ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ सामवेद १।१
ॐ ये त्रिषप्ताः परियन्ति विश्वारूपाणि बिभ्रतः ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ अथर्ववेद १।१ शन्नो ......

ॐ भूर्भुवःस्वः श्रीगणेशाम्बिकाभ्यां नमः, श्रीआवाहितेभ्यः सर्वेभ्यो देवेभ्यो नमः, श्रीभगवते साम्बसदाशिवाय नमः, प्रार्थनापूर्वकं नमस्करोमि, प्रणमामि । ततः-

## कर्मसमर्पणम्

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
एतत्कर्मफलं श्रीकर्मेश्वरार्पणमस्तु । ॐ तत्सन्न मम । ततो यजमानस्य-

## तिलकाशीर्वादः

ॐ आ ब्ब्रह्मन्न्ब्ब्राह्म्मणो ब्ब्रह्म्मवर्च्चसी जायतामा राष्ट्रे राजन्न्यः शूरऽइषव्व्योतिव्याधी महारथो जायतान्दोग्ग्ध्री धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषा जिष्ष्णू रथेष्ठाः सभेयो युवास्य यजमानस्यव्वीरो जायतान्निकामेनिकामे नः पर्ज्जन्न्यो व्वर्षतु फलवत्यो नऽओषधयः पच्च्यन्तांय्योगक्षेमो नःकल्प्पताम् ॥ २२।२२
ॐ दीर्घायुस्तऽओषधे खनिता यस्म्मै च त्वा खनाम्म्यहम् ॥
अथो त्वन्दीर्ग्घायुर्भूत्वा शतवल्शा व्विरोहतात् ॥ १२।१००
ॐ पुनस्त्वादित्त्या रुद्द्रा व्वसवः समिन्धताम्पुनर्ब्ब्रह्माणो व्वसुनीथ यज्ञैः ।
घृतेन त्वन्तन्वंव्वर्द्धयस्व सत्त्याः सन्तु यजमानस्य कामाः ॥ १२।४४
ॐ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ ऋग्वेद

### रक्षाबन्धनम्

ॐ त्वंय्यविष्ठदाशुषोनॄꣳ पाहि शृणुधीगिरꣳ ॥ रक्षातोकमुतत्क्मना ॥१३।५२

महर्षिमहेशयोगी विजयन्तेतराम् ॥
गुरुब्रह्मानन्दसरस्वती विजयन्तेतराम् ॥
वैदिकगुरुपरम्परा विजयन्तेतराम् ॥
विश्वशान्तिराष्ट्रम् विजयन्तेतराम् ॥
महर्षिवैदिकविश्वप्रशासनम् विजयन्तेतराम् ॥